श्रीआदिशंकरदृष्ट्या —

# आत्मज्ञानप्राप्तौ द्वितीयं साधनं वैराग्यम्

—— श्री मणिरत्ना शास्त्री



भगवत्पादश्रीआदिशंकराचार्यमतानुसारेण आत्मज्ञानप्राप्तौ द्वितीयसाधनं वैराग्यम् । अत्र किं तावत् वैराग्यमिति प्रथमतः निरूपणीयम्-तथोक्तम् —

अन्तस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते ।
त्यजत्यन्तर्बहिः संगं विरक्तस्तु मुमुक्षया ॥
— विवेकचूडामणिः

श्लोकेऽस्मिन् वैराग्यस्य सर्वांगपूर्णं स्वरूपम् निरूपितम् । कर्मेन्द्रियाणाम् ज्ञानेन्द्रियाणामपि मनसा सह सर्वथा विषयभोगत्यागः एव वैराग्यम् न तु बाह्येन्द्रियाणाम् निवृत्तिस्तथा मनसा विषयाणामनुचिन्तनम् तथाहि —

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥
— गीता ३-६

अस्य श्लोकस्य शांकरभाष्ये भगवतोक्तम्—

"कर्मेन्द्रियाणि हस्तपादादीनि संयम्य संहृत्य च आस्ते तिष्ठति मनसा स्मरन्निन्द्रियार्थान् विषयान् विमूढान्तकरणो मिथ्याचारः पापाचारः स उच्यते ।" आप्तवाक्यमिदम् । कारणवशात् (सामाजिक मर्यादा भंगभयात्) बाह्येन्द्रियाणि तत्तद्विषयेभ्यः निवृत्य मनसा चिन्तयन्नास्ते तदैव पापाचारः, नतु सविरागः । मनः यदहं यावन्न संयम्यते तावन्न हि वैराग्यमुत्पन्नं भवति । उक्तञ्च—

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
मोक्षप्राप्तौ विषयेषु बन्धने च बलवत्तरं कार्यमस्ति मनसः ।

विगतम् रागम् विरागम् तस्य भावः वैराग्यम्, सर्वविषयेषु स्पृहाशून्यत्वम् । आदिशंकरः पूर्णं विरागी आसीत् । तस्या-

न्तरणं हि परात्परभगवत शंकरादेव-"शंकर: शंकरो साक्षात् दु:साध्यकर्माणि सम्पादयितुम् परमेश्वरेणैव पार्थिवशरीरं स्वीकृतम्" एतद्धिकारणम् आदिशंकरस्य विरागित्वे ज्ञानित्व च। उक्तञ्च-ज्ञानम् शंकरादिच्छेत्।

भारतवर्षेऽस्मिन् कतिपया: विरागिपुरुषा: स्त्रियश्च प्रादुरभवन्-शाक्यवंशे भगवान् बुद्धदेव: (कपिलवस्तु) अलिंगस्वामि (होलिया दक्षिणापथ) प्रेमिभक्त श्री कृष्णचैतन्य (नदीया) श्री रामकृष्ण परमहंस (बेलुड़मठ) स्वामी विवेकानन्द: (बेलुड़मठ) मातृ शारदा (बेलुड़मठ) स्वामी शिवानन्द (स्वर्गाश्रम ऋषिकेश) इत्यादय: बहव: विरागिसाधका: अतीव समादरणीया:। एतेषां खलु जीवनचरित्राणि- विरागि जीवनेनैव सम्यग्ज्ञानप्राप्तौ कथम् सिद्धि: स्यादस्य ज्वलन्तोदाहरणानि अधुनाऽपि नवोदितानाम् जिज्ञासु साधकानाम् मार्गदर्शन कुर्वन्ति। एतेभ्य: महानुभावेभ्योऽपि आदिशंकरस्य जीवनमेव वरिष्ठतममिति एकान्तसत्योपहितम्। विरागिसाधकलेखकसमाजसुधारक अध्यापन-पाण्डित्यादि कतिपयोत्तमगुणै:।

तस्यावतरणं हि लोकोपकाराय। लोककल्याणार्थंन्तु सम्पूर्णवैराग्य जीवनं विना नहि सुसिद्ध्यति। शंकर: सांसारिकविषयभोगान् अजानन् एव विषयविरागी अभवत्। अस्योदाहरणन्तु-मण्डनपत्नी उभयभारती देव्या: सह शास्त्रार्थे क्रियमाणे — देव्या: कामकेलि विषयक कतिपयप्रश्नानां उत्तरदानाय एकमासस्याऽवसरम् — याचितम् भगवता—तदैवोदितोऽभवत्। शंकर: स्वकीयायुषि तृतीय-वर्षं पूर्तेव मातृभाषायां यथेष्टाध्ययनं कृतवान् तदनन्तरं संस्कृत भाषा-माध्यमेन स्वकीयाष्टवर्षावस्थां यावत् गुरुपादात्प्रभृताध्ययनानन्तरं-शीघ्रमेव स्वगृहं तत्याज।

सांसारिकविषयेभ्य: पराङ्मुखीभूतानाम् विरागिमहानुभावा-नाम् द्वौ भेदौ स्त: (१) अभुक्त भोगी (२) भुक्त भोगी च आदि-शंकररामकृष्णविवेकानन्दमातृशारदाप्रभृतय: अभुक्तभोगिन: बुद्धदेवगौरांगशिवानन्दादय: भुक्तभोगिन:। अभुक्तभोगिनाम् जीवनकार्यक्रमेषु न एकोऽपि विषयासक्तावसरोऽस्ति। एते हि नैष्ठिकन्यासिन:, ब्रह्मज्ञानिन: पूर्णप्रज्ञाश्च यत:—

स्वकर्मपाशवशग: प्राज्ञोऽन्यो वा जनो ध्रुवम्।
प्राज्ञ: सुखं नयेत् कालमिति वेदान्तडिण्डिम:।

इत्येवं आदि शंकराचार्यस्यामोघरामबाणवचनम्। प्रज्ञा-प्राप्तिस्तु प्रारब्धकर्मबन्धने निपतितानामेव परन्तु दुस्त्याज्यम्

प्रारब्ध कर्मफलम् अनायासेनातिक्रमितुं ब्रह्मज्ञानप्राप्त्यर्थञ्च सतत-प्रयत्नं कुर्यात्-सर्वंकर्माखिलं ज्ञाने परिसमाप्यते इति भगवद्वचनात्। अखिलविश्वमिदम् स्वप्नविकारम्। अयं नामरूपस्यैव विकारमात्रम्. तथोक्तम् —

न नामरूपे नियते सर्वत्र व्यभिचारतः।
अनामरूपं सर्वं स्यादिति वेदान्तडिण्डिमः॥

निश्चितमेव यत्— नामरूपे सर्वत्र परिवर्तनशीले, व्यभिचारिणी, अनित्ये। स्वप्नविकारस्यास्य संसारस्य विषये भगवतोक्तम् —

वयसि गते कः कामविकारः शुष्के नीरे कः कासारः।
नष्टे द्रव्ये कः परिवारः ज्ञाते तत्त्वे कः संसारः॥
कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः।
इति परिभावय-सर्वमसारं विश्वं त्यक्त्वा स्वप्नविकारम्।

— चर्पट पञ्जीकास्तोत्रम्

वैराग्यविधौ सर्वाग्रे संसारस्यासारत्वज्ञानम् परमावश्यकम् तदेव हि घृणास्पदम् अतएव दूरात्त्याज्यम् तथैवोपदिष्टम् स्तोत्रेऽस्मिन्। आत्मज्ञानप्राप्तेः वैराग्यम् परमावश्यकम् न चेत् विपदास्पदम् —

विषयविषममार्गे गच्छतो नष्टबुद्धेः।
प्रतिपदमभियातो मृत्युरप्येष विद्धि।
हितसुजनगुरूक्त्या गच्छतः स्वस्ययुक्त्या।
प्रभवति फलसिद्धिः सत्यमित्येष विद्धि॥

— विवेकचूडामणिः (विषयनिन्दा) २९-८३

तथ्यमिदमस्ति यत्-सांसारिकविषयभोगेषु ये जनाः अधिकाधिक्येन संलग्नाः सन्ति ते हि विपज्जालग्रस्ताः। अवश्यमेव भोक्तव्यम् कृताकृतमशुभाशुभम्। आत्मज्ञानान्मुक्तिः भवति। तत्कारणञ्च विषयभोगविमुखम् यदुक्तम् —

मोक्षस्याकांक्षा यदि वै तवास्ति
त्यजातिदूराद्विषयान् विषं - यथा।
पीयूषवत्तोषदयाक्षमार्जव-
प्रशान्तदान्तीर्भज नित्यमादरात्॥

— विवेक चूडामणिः (विषय निन्दा) २९-८४

मोक्षं-वाञ्छति चेत् सांसारिकविषयभोगान् दूरादेव त्यजेत्

त्यंकपविषमिव, तदनन्तरं संतोषक्षमादयः सत्यतापमदमादीप् समा-
दरेण प्रयत्नेन च ग्रहणीयम् ।

किंनाम वैराग्यमिति अनुशीलनीयम् – यदुच्यते—

तद्वैराग्यम् जुगुप्सया दर्शनश्रवणादिभिः ।
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तुनि ॥

– विवेकचूडामणिः, (साधनचतुष्टयम्)
१३-२

देहादारभ्य ब्रह्मपर्यन्तम् (आब्रह्मस्तम्बपर्यन्तम्वा) समस्त
सांसारिकभोग्यवस्तुषु दर्शनश्रवणादीनां घृणामुत्पाद्य दूरात्तान् परित्य-
ज्य सर्वेषु भोग्यवस्तुषु अरुचि वैराग्यमुच्यते । विरागि पुरुषो हि
ब्रह्मनिष्ठोऽपि भवति । तथा –

बहिस्तु विषयैः संगं तथान्तरदमादिभिः ।
विरक्त एव शक्नोति त्यक्तुं ब्रह्मनिष्ठितः ॥

– विवेकचूडामणिः १२२-३७४

इन्द्रियाणां तत्तद्विषयेभ्यः पराङ्मुखी कृत्वा तेषां सम्बन्धानपि
निषिध्येत; आन्तरिकभावानपि परित्यजेत । स एव बलवान् पुरुषः,
ब्रह्मणिनिष्ठितः (प्रज्ञाप्रतिष्ठितः) नायमात्मा बलहीनेन लभ्यः
वैराग्यनिरूपणे उक्तम् –

वैराग्यबोधौ पुरुषस्य पक्षिवत्
पक्षौ विजानीहि विचक्षणत्वम् ।
विमुक्तिसौधाग्रतलाधिरोहणम्
ताभ्यां विना नान्यतरेण सिद्ध्यति ।

– विवेकचूडामणिः १२२-३७५

वैराग्यादेव ज्ञानोदयः सम्भवति । वैराग्य ज्ञानोदयौ अविच्छेद्यौ
भवतः । एकस्यैव पक्षिणः द्वौ पक्षौ; एकस्याऽभावे नहि मुक्तेः सिद्धिः
स्यात् ।

वैराग्यस्वरूपं निरूप्याधुनाज्ञानप्राप्तौ तस्यावश्यकतां निरूपयि-
ष्यति तस्य द्वितीय साधनभूतञ्च काम्यम् ? विचारणीयम् । आत्मज्ञान
प्राप्तेः प्रथमम् साधनम्–स्वयं जिज्ञासु व्यक्तिः । सोऽपि प्रारब्धकर्म
प्रेरितः अभ्यच्च प्रारब्ध पुण्यकर्मफलेनैव पूतात्मा, गुरुवेदान्तवाक्येषु
श्रद्धालुः श्रवण-मनन निदिध्यासनादौ अभिनिविष्टमनः साधको
वैराग्यस्याधिकारो भवति तद्धि अतीव विरलः यतो–

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्यविविनक्ति धीरः
श्रेयोहि धीरोऽभिप्रेयसो वृणीते, प्रेयोमन्दोयोगक्षेमाद् वृणीते
– कठोपनिषद्- १-२-२

अस्य मन्त्रस्य विषये शाकर भाष्ये उच्यते –

"उच्यते सत्यं स्वायत्ते, तथापि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सति व्यामिश्रौ भूते इव मनुष्यम् एतः पुरुषम् आ+इतः प्राप्नुतः श्रेयश्च प्रेयश्च। अतो हंस इवाम्भसः पयः, तौ श्रेयः प्रेयः पदार्थौ सम्परीत्य सम्यग् परिगम्य मनसा सम्यक् आलोच्य गुरुलाघवं विविनक्ति पृथक् करोति धीमान्। विविच्य च श्रेयो हि श्रेय एव अभिवृणीते प्रेयसोऽभ्यर्हितत्वात् श्रेयसः। कोऽसौ धीरः। यस्तु मन्दोऽल्पबुद्धिः स सदसद् विवेकासामर्थ्यात् योगक्षेमनिमित्तं शरीराद्युपचय-पक्षणनिमित्त मित्येतत्, प्रेयः पशुपुत्रादि लक्षणं वृणीते।"

प्रेयोमार्गे धावन्ति मूढाः। श्रेयो मार्गे तु मुष्टिपरिमेयपुण्यवत् केषाञ्चिद् व्यक्तयः अनुसरन्ति हि विद्यानिष्ठाः। इह अविद्यानिष्ठत्वात् (मायाबद्धत्वात्) मनुष्याणां जीवनम् नीचप्रवृत्तावेव (प्रेयोमार्गे एव) अनुधावने अभ्यस्तम्। तस्माद्धि उध्वंम् उपनयनार्थम् श्रेयोमार्गे अनुप्रेरणार्थम्) शंकरेणोक्तम्-

उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ।
योगरूढ़त्वमापाद्य-सम्यग्दर्शननिष्ठया-
विवेक चूड़ामणिः १०-१०

गीतायाञ्च-

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव हि आत्मनो बन्धुरात्मैव रिपुरात्मनः - ३।

आत्मनैव आत्मानं उद्धरेत् न कोऽपि उपायान्तरेण सम्भवः अतएव आत्मनैव आत्मनः बन्धुरूपेण मन्यमानः तथोचितकार्याणि च क्रियमाणः सन् परमार्थप्राप्त्यर्थं सतत प्रयत्नं कुर्यात्। परमतत्त्वं विना जीवनं निरर्थकम् यदुक्तम्—

अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला।
— विवेकचूड़ामणिः २३-६१

परमतत्त्ववेदार्थम् सर्वशास्त्राणि अध्येतव्यानि, परमतत्त्ववेदानन्तरम् किमन्यैः शास्त्रविस्तरैः सर्वं कार्यं कलापाः। तदनन्तरं सर्वं त्याज्यम्

मनुष्यजीवनमतीव दुर्लभं. तत् समवाप्य पुनः नाधः पतनार्थम् कतिपयउपदेशाः प्रदत्ताः । मनुष्यजीवनं स्वयमेवात्मना उद्धर्तुं शक्नोति, इतरे जीवास्तु तदसमर्थकाः भवन्ति । मनुष्यः यथावत् उद्धर्तुं सशक्तः तथावत् अधोपतनार्थमपि पदे पदे याध्यो भवति तद्भिन्नेतरे जीवाः अधः पतन्ति सांसारिकविषयेभ्यः पराङ्मुखो (विरागी) भूत्वा परमगतिलाभार्थम् परमज्ञानेन बिना नान्यः पन्था-विद्यते । उपदेशसहस्रीग्रन्थे—

जन्ममृत्यु प्रवाहेषु पतितो नैव शक्नुयात् ।
इत उद्धर्तुमात्मानं ज्ञानादन्येन केनचित् ॥ ३६३-५२

उपदेशसहस्री—

अपरंच—

श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनर्जवम् ।
वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमतो तथा ॥

४१३-६७

सर्वाः कुटिलताः विहाय श्रद्धाभक्ती पुरस्कृत्य वेदान्तदर्शनस्य (अद्वैत-तत्त्वस्य) वेद व्यासोक्तपरमतत्त्वस्याभिप्रायञ्च सम्यगवगम्य तेषां निर्देशित-मार्गेषु अनुसर्तव्यम् तदैव परमपुरुषार्थं प्राप्नुयात् ।

परमज्ञानजिज्ञासु विरागी साधकः केनोपायेनानायासेनामृतत्वं प्राप्नुयात् विषयेऽस्मिन् आदिशंकरेण कतिपयोपदेशाः प्रदत्ताः । तेषु निम्नलिखिता मूलश्लोकं ग्रहणीयम् । सर्वाणि तीर्थानि सर्वान् वेदाञ्च परित्यज्यापि एकमेव मानसतीर्थं सुसेव्यमानः पुरुषः अमृतत्वं हि प्राप्नुयात्—

यस्मिन् देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।
ब्रजेत् तं मानसं तीर्थं यस्मिन् स्नात्वाऽमृतो भवेत् ।

उपदेशसाहस्री ३१५-४०

यत्र सर्वाणि तीर्थानि ऋग् यजुः सामादिवेदान् अनायासेन प्राप्नुयात् तद्धि मानसतीर्थमिति ख्यातः तत्र स्नानं कुर्वन् अर्थात् 'तत्त्वमसीति' महावाक्येन पूतः (निदिध्यासितः) मानसतीर्थे विलसन् मनुष्यः अमृतत्वमाप्नोति । एतद्धि अविद्यातारकम् ।

आदिशंकराचार्यस्य प्रायः सर्वे ग्रन्थाः निवृत्त्युपदेशकाः श्रेयोमार्गस्य मार्गदर्शकाः, अतएव परमकल्याणकारकाः इति निश्चितम् । तेषामध्ययनेनैव परमपुरुषार्थं प्राप्तौ । सुगमपंथेति मन्ये । किं बहुना—

संक्षेपेण प्रवक्ष्यामि यदुक्तं ग्रंथकोटिभिः ।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥

इत्युक्तम् आदिशंकरेण। तस्य समग्र ग्रन्थेषु उचितरेखा परिताषा च कृता। आदिशंकरस्य समस्तग्रन्थानाम् आपाततः— आदिशंकर कृतम् ब्रह्मविद्याग्रन्थमिति नानध्येयं कृतम् चेत् तदपि उचितम् मन्ये लेखकस्य मनोवृत्तयः, हार्दिकमनोवाञ्छाः जीवनस्याधिकाधिककार्यकलापानाञ्च इतिवृत्तयः स्वस्य समस्तग्रन्थेषु सम्यग् परिलक्ष्यन्ते, स्पष्टतयाध्ययनम् प्राप्यन्ते, अत्राऽपि एतद्धि कारणम्। आदिशंकरस्य प्रादुर्भाव उद्देश्यं तु— वेदव्यास गौड़पादाचार्य गोविन्दपादाचार्यादिभिः सुस्पष्टरूपेण निरूपितं यत् व्यासदेव कृत वेदान्तब्रह्मसूत्राख्यग्रन्थरत्नस्य भाष्यप्रणयनेन सह अद्वैतवेदान्ततत्त्वोपदेशपूर्णानाग्रन्थानपि रचयित्वा तेषां लोकेषु सफलप्रचार प्रसारणमिति। ग्रन्थानाम् प्रणयनानन्तरं तेषां लोकेषु सफलप्रचारार्थम् भगवता स्वयं कृष्णद्वैपायनेनआदिशंकरस्यायूंषि द्विगुणी कृतानि अर्थात् चन्द्रमौलीश्वरेण मातृविशिष्टायाः स्वप्नादेशेन यत् षोड़शवर्षाणि आयु प्रदत्तम ततोर्द्धं द्वात्रिंशत् शंकरस्यायुः कृतानि समाजसुधारकार्याण्येव विभिन्नधर्मसम्प्रदायानाम् एकमेव अद्वैतमार्गनिर्दिष्य एकत्रीकरण रूप समाजसुधार कृत्वैव— आदि शंकरः समाजसुधारक इति ख्यातः समीचीनश्च सः।

आत्मज्ञानप्राप्तौ वैराग्यम् अमोघरामबाणम्। तस्य पात्रमपि दाशरथि रामचन्द्रवत् मर्यादापुरुषोत्तम एव स्यादिति। सत्पात्रेदानम् इतिख्यातम्। आदिशंकरस्य वैराग्योपदेशानाम् अधिकारिणोऽपि सत्पात्राः एव स्युरित्य भिप्रायम्। अद्ययावत् आदिशंकरस्योपदेशाः सुष्ठु जीवन्ति, कार्याणि सम्पादयन्ति च परन्तु अस्यां कलियुगसन्ध्यायां वैराग्य ग्रहिष्णुसत्पात्राणाम् शिष्याणामेवाभावः। गुरुस्तु आधुना यावत् व्याख्यां प्रयच्छति जिज्ञासु शिष्येभ्यः।

— वास्तव्यः—एआंबमलैकाइ, इंफाल असमः



# कायाकल्पस्य दिव्यौषधिः

ले० जगदीशशरण जी बिलगैयां "मधुप"

ग्र० रामस्वरूप शास्त्रीः अमरः" लालवेहटस्थः



पुनर्नवा नामिका कायाकल्पस्यैका दिव्यौषधिर्वर्तते । यस्याभिधेयं हिन्द्यां "विषखपरा" इति वर्तते । स्वविकासकालादेव मानवजातिः स्वकीयस्वास्थ्यप्राप्तये निरन्तर प्रयतते । मानवैः स्व-जीवनस्य दीर्घायुष्ट्वाय तथा चानरताऽमरतोपलब्धयेऽनेके प्रयत्ना विहिताः सन्ति । तत्प्रयत्नैर्यथाशक्यं मानवजातिरियं सफलाऽपि समभवत् । साधकैर्वेदविशेषज्ञैस्तान्त्रिकैस्तथा चायुर्वेदविज्ञानविशेषज्ञैर्योगाचार्यैश्चापि स्वकीयै दीर्घकालीन गहनानुभवैः प्रयोगैश्च समुचिततथ्यमुपलभ्य विश्वस्मै विश्वाय स्वानुभवरत्नानि सर्मपितानि सन्ति । दीर्घायुषे तथा च नवयौवन सम्प्राप्तये त्रय आधारस्तम्भा निर्मिताः सन्ति । प्रथमाधारस्तु योगः. द्वितीयाधारश्च तन्त्र-मन्त्रसाधना, तृतीयश्चाधारो वर्तते तावदौषधय इति ।

योगस्यं खेचरीमुद्रया कायाकल्पस्य कतिपयैः क्रियाविशेषैः चैव योगासनैस्तथाध्यानसमाधिप्रभृतिभिः केचन योगिनो दीर्घजीविनोऽजरा अमराश्चाभूवन् ;तेषु महापुरुषेषु श्री मत्स्येन्द्रनाथ श्री गोरक्षनाथादयो महात्मानः प्रमुखाः सन्ति । तन्त्र—मन्त्र- साधनानामप्यनेकान्युदाहरणानि तन्त्रशास्त्रेषु तन्त्रेषु च सन्निहितानि वरीवर्तन्ते देवीनां देवतानाञ्चोपासनाभिरपि बहवः साधकाः सत्पुरुषाश्च दीर्घजीविनोऽजरा अमराश्च सञ्जाताः सन्ति । महर्षि श्री लोमश मार्कण्डेयादयोमहात्मानोऽस्य प्रबल-प्रमाणस्वरूपेण दर्शिता दरीदृश्यन्ते । सप्त चिरजीविनो, येषु-अश्वत्थामा बलिर्व्यासो हनुमांश्च-विभीषणः । कृपः परशुरामश्चैतेसप्तमहापुरुषाः प्रमुखाः सन्ति । एतेषु श्री पवनात्मजाय श्रीमते हनुमते. सीता—जनन्याः अजर अमर गुणनिधि, सुत होंऊ । करहिं सदा रघुनायक छोहू । इत्येतदगोघवरदान मिलितमेवास्ति । श्री विभीषण-कृपाचार्य—परशुरामादीनां शुभाभिधेयैस्तु सर्बे जनाः परिचिता एव सन्ति ।

तन्त्रसाधनायामेकमुदाहरणं द्रष्टव्यमेवास्ति । सुरकात्यायनीदेव्याश्चतुर्वरण—मन्त्र-साधनया तत्कर्तुः साधकस्य पञ्च शतवर्ष मितंजीवनं जायते ।

तथा च सा साधना अष्टशत-मितेभ्यो भोजनं ददातीति । साधकस्य स्वर्गमने च तस्य पुनरुच्चकुले जन्म जायते । इति निश्चितमेवास्ति । ऋग्वेदोपवेदे चायुर्वेदे त्वनेकप्रकारकै रसैः रसायनैरौषधिभिश्च कायाकल्पस्य प्रयोगाः प्रदर्शिताः सन्ति । केवलं त्रिफलाचूर्णस्य सालम-मिश्री तिनाम्न्या सह घृतेन च सार्धं सेवनेन पञ्चशतवर्षाणां पुरुषस्यायुर्भवतीति निश्चप्रचमुत्तरदायित्वपूर्णं कथनमस्तीति ।

एतत्तु सर्वविदितमेव वर्तते । यत् "सञ्जीवनीबूटी — दानेन श्री वीर-लक्ष्मणः पुनर्जीवितोऽभवत् । अस्यामेव कोटौ पुनर्नवा (विषखपरा) इति नामिका दिव्यौषधिरायाति । यादृशमस्याभिधेयमस्ति ? तादृशमेव पुनर्मा-नवेभ्यश्चिर-यौवनमेषा दिव्यौषधिः प्रददातीति । औषधिरेषा चिरजीवन प्रदात्री इतिसत्यमेवास्ति यदि मुहूर्तविशेषे - इयमौषधिः साधकेन गृहीत्वा सेव्यते ? तर्हि विशेषरूपेण स्वप्रभावं दर्शयति । ज्योतिः शास्त्रे पुनर्नवा-सेवनार्थं - निम्नमन्त्र - स्वर -लग्न पर्व - ग्रह - नक्षत्राणि निर्दिष्टानि सन्ति । मन्त्रः — ओ३म् 'अच्युताय नमः" । औषधिसेवनसमये मन्त्रोऽयमष्टोत्तर-शतवारं जपेत् । इति । स्वरः — चन्द्र — मात्रम् । चन्द्रमा सम्पूर्णौषधीनाम-धिपति स्वीकृतोऽस्ति । अत एव स्वरवैज्ञानिकैश्च द्र स्वरः पुनर्नवासेवनार्थ-मुपदिष्टो वर्तते । तात्पर्यमिदमस्ति । यद्-यदा वामस्वर प्रचलेत् तदैव पुनर्नवा औषधि - सेवनं श्रेयस्करम् । शुभग्रहाः यथा - सोमो बुधस्तथा गुरुः तथा च शुक्रो ग्रहः शुभः स्वीकृतोऽस्ति । अतः ग्रह—योगे पुनर्नवानामिकौषधिः सेवनीया इति ।

नक्षत्राणि हस्त, पुनर्वसु श्रवण, मृगशिरः, स्वातिकृतिका ज्येष्ठा-शतभिषा-धनिष्ठा इत्येतेषु नामकेषु नक्षत्रेषु पुनर्नवा सेवनं सर्वोत्तमं निगदितमस्ति । लग्नम् षष्ठ सप्तमाष्टमद्वादशभावेषु गेहेषु शुभो गुरुर्ब-लवान् भवति अतः सर्वैः पुरुषै रायुर्वृद्धिकारके शुभे योगे पुनर्नवौषधिसेवनं श्रेयस्करं भवति इति । अस्मिन् कार्ये जन्म-चन्द्रमा वर्जितो भवति ।

## पुनर्नवा कल्प :-

भावप्रकाशनिघण्टोः पृष्टसंख्यायां २२३,२२४ पृष्ठयोरस्य विवरणं प्रदत्तमस्ति । यत्संक्षेपेणेत्थं वर्तते । पुनर्नवायास्त्रीणि चत्वारि वा प्रकाराणि भवन्ति । पुनर्नवायाः पत्राणि वर्तुलाकाराणि गोलाकाराणि वाभवन्ति पुष्पाणि, रक्तवर्णानि श्वेतवर्णानि भिन्नभिन्न स्वरूपाणि च भवन्ति । एतेषु पुष्पेषु श्वेतवर्णपुष्पस्य नाम विषखपरा" अस्ति । तथा च रक्तवर्णग्रन्थेश्च 'घुनेरा" इति नामवर्तते । "विषखपरा" इत्यस्य स्वरूपं रूपं वा पृथिव्यां विस्तृतं प्रसृतं वा भवति । पर्णानि वर्तुलानि

गोलाकाराणि रक्तवर्णानि च भवन्ति पुष्पाणि च श्वेतवर्णानि जायन्ते । श्वेतवर्णा पुनर्नवा यथा—

पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका ।
कटुः कषायानुरसा पाण्डुघ्नी दीपिनी परा ।

शोफानिल-गर-श्लेष्महरी वृण्योदरप्रणुत् । इत्येतानि संस्कृतभाषायां पुनर्नवाया नामानि सन्ति । पुनर्नवाया गुणाः- यथा पुनर्नवा कटुः कषाया अतिशयेनाग्नि - दीपिका । पाण्डुशोथरोगघ्नी तथा च वृणोदर-रोग नाशिनी च वर्तते । विभिन्नासु भाषासु पुनर्नवाया विभिन्नानि नामानि निगदन्ते । यथा -

हिन्दी भाषायां - श्वेत पुनर्नवा । बङ्गाभाषायां श्वेतगांण इति महाराष्ट्र भाषायां: होदुली "इति । कन्नड भाषायां विलीयं दुवेल्लढ़किलु' इति तमिलभाषायान्तु "हुकरसेकिरे" इति । जर्मनभाषायां 'इन्दकूकी" इति । आङ्गलभाषायां 'Spreadinghoweed" इति कथयन्ति । लेटिन-भाषायाञ्च-"वार्का विवाडिपूयूका' इति वदन्ति ।

तन्त्रानुसारमौषधिग्रहणनियमाः - यथा

औषधि-सेवनात्पूर्वं तस्यै विधि - पूर्वकंनिमन्त्रणं देयम् औषध्युन्मोच-नादेक - दिवस - पूर्वञ्च तत्स्थलं गत्वा यत्र एषौषधिः स्थिता स्यात् -तत्र पीता यक्षतानि नीत्वा तत्स्थाने संस्थापयेत् । तथा च कलशेकजलं समर्प-यित्वा प्रार्थनामिमामित्थ प्रकुर्यादि यद् -

हे देवि ! अहं स्व - कार्यसाफल्यार्थं त्वां नेतु सादरं निमन्त्रयामीति ।

औषधि - समुत्पाटन - नियमाः । यथा -

पुनर्नवौषधि - समुत्पाटनः -समये सर्वप्रथयं कलशे जलं गृहीत्वा तदौषधि-पुनर्नवोपरि समर्प्य च धूपदीप - नैवेद्य - प्रसाद - मिष्टान्नादिकमेवमेव फलानि पुष्पाणि चन्दनाक्षतादीनि समर्पणीयानीति । औषधि - पूजनञ्च विधातव्यम् । तत्पश्चात् प्रार्थनैषा कर्त्तव्या । यद् हे देवि ! यत्कार्यार्थं त्वदीयं ब्रह्मविष्णु-महेश्वरैः खननं कृतम् । तदर्थमेवाहं स्वकार्यपूर्तये त्वदीयं खननं विधास्ये" इति ।

एवमुक्तवौषधिमुत्पाटयेत् । नियमोऽसौ सर्वौषधि समुत्पाटनार्थं वरीवर्तते ।
पुनर्नवा - कल्प - यथा

पौषमासीय - शुक्लपक्षस्य रविवासरे प्रातः कालं मूलेन पर्णैश्च सम श्वेत - विषखपरा-नामिका पुनर्नवा, समुत्पाटनीया । पुनर्नवां ताञ्च शोष-

यित्वा पिष्ट्वा च चूर्णं विदध्यात्। तदनु घृतेन विषममात्रया मधुना च साकं मर्दयित्वा यत्नेन घृतपात्रे संस्थापयेत्। वदेच्च यद् हे देवि ! मासमेकान्तरं कथितौषधिः पुनर्नवा चम्पासदृशं भविष्यतीति। पुनःश्चैत्र वैशाख - मासयो वसन्त-समये पावनो भूत्वा प्रयत्नपूर्वकं मासमेकं सेवेत। सेवनेनैतेन मलमूत्रयोः सुगन्धिर्जायते। शिरोरुहाश्च भ्रमरपक्षवत् - कालिमानं भजन्ते। शरीरञ्च गौरवर्णं गौराङ्गं वा सञ्जायते बृहस्पतिरिव तस्मै विदुषे पञ्चशतवर्षाणामायुषः प्राप्तिर्जायते।

एतत्पुनर्नवा - कल्पतुल्योऽन्यः कश्चिदपि कल्पः पृथिव्यां नास्ति इति। पुनर्नवा - सेवनेन, देहे यौवनं सुस्थिरीजायते। विश्वेऽस्मिन् आयुर्विज्ञानविशेषज्ञैरेवं वनस्पतिशास्त्र - विशेषज्ञैरपि पुनर्नवायाश्चास्या दिव्याया औषधिनाम्न्याः सम्बन्धे विषये चाप्यधिकमन्वेषणं प्रयोगीकरणञ्चापि प्रयत्नपूर्वकं विधेयमिति। यतः साधारणो जनोऽपि पुनर्नवौषधिविज्ञः परिचितश्च भवेदिति। एतद्विशेषज्ञानामिदं परमं कर्त्तव्यमेवास्ति यतः

दिव्या पुनर्नवा प्रोक्ता दिव्यायुः- सौख्यदायिनी।
रामस्वरूप - रूपाय स्वास्थ्यमेधादिदा शुभा॥
पुनर्नवा - कल्पः सर्वेषामेव हितार्थं मया लिखित इति।



❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋

## पाठकाः प्रार्थ्यन्ते

मान्याः !

प्रवर्तमानवर्षस्यापि अर्धभागो व्यतीतः। पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम्। अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम्।

—सम्पादकः



शास्त्री ओमप्रकाश राही
आचार्य, एम. ए., एम. फिल.



१. उपाय: –

विवदतोर्मध्ये एकः प्राह—
साधारणपुरुषः नास्म्यहम् ।
"धनार्जनस्य शतमुपायाः",
पुस्तकमेतदहमलिखम् ॥
पप्रच्छान्यः कथं तर्हि,
भिक्षा त्वया याच्यते ?
प्रत्युवाच पूर्वस्तम्
एषोऽप्युपायः विद्यते ॥

२ परीक्षा फलम् :-

अध्यापकः पप्रच्छ ब्रूहि छात्र !
मधुरं कटु च किं फलम् ?
हसन्नाह छात्रश्शीघ्रं—
तदस्ति भगवन् परीक्षाफलम् ॥

३. हृद्रोगोपचार :-

दूरस्थं निजप्रेमिण चिकित्सकम्
प्रेमिकाऽलिखदेकं पत्रम् ।
त्वं तु नायासि मित्र !
इतश्च वर्धते हृद्रोगः नित्यन् ॥
पत्रोत्तरे लिखितं कान्ते !
पूर्णविवरण प्रेषय शीघ्रम् ।
व्यस्ततयाऽऽगन्तुमसमर्थः,
प्रेषयिष्याम्यौषध तुभ्यम् ॥

— रा. उ. पि. बोगधार
सिरमौर—(हि. प्र.)




## अश आर–रसधार श्रेयः खण्डः

रूपान्तरकारः : श्री शान्त प्रकाशः सत्यदासः ।

मूल्यम् : दश रूप्यकाणि ।

प्राप्तिस्थलम् : सी–५/ बी सी लाइन

विरला ग्राम—नागदा जं० ४५६३३१ (म. प्र.)

पुस्तकमिदं ७६ पृष्ठात्मकमस्ति सावरणम् । पुस्तकेऽस्मिन्-३०० मितानां उर्दू साहित्यस्य गजलेभ्यः रोचकपद्यानां संस्कृत रूपान्तरं कृतमस्ति । यथा :—

उर्दू :— गजब है कि दिल में तो रक्खी कदूरत ।
करो मुंह पै हम से सफाई की बातें ।

संस्कृतः— अहो मानसे शत्रुतायाः निवासः ।
तथापि क्रियन्ते मिथः- प्रेमवार्ताः ।

एवं किल हृदयस्पर्शि उर्दू-पदानां संस्कृतानुवादः तेष्वेव लयच्छन्दःसु कृतोऽस्ति येषु किल उर्दू भाषायाम् । उर्दू हिन्दी संस्कृत विज्ञाः सर्वेऽपि पदानामेषामानन्दं समानरूपेण प्राप्तुमर्हन्ति । देशस्य एक्यभावनयाऽनूदितमिदं साहित्यं महत्वपूर्णमस्ति । पुस्तकस्य मूल्यं स्वल्पम् । अतोऽधिकाधिक संस्कृत-प्रणयिभिरिदं पठनीयमस्ति श्री शान्त प्रकाशः सत्यदासश्च धन्यवादार्हः येन प्रयासोऽयं विहितः । मुद्रणं शुद्धमस्ति । एवं विधपुस्तकस्यावरणमधिकाधिकमाकर्षकं भवितुं शक्नोतिस्म परन्तु संस्कृतपुस्तकानां विक्रयाऽभावात्तथा कर्तुं न पारितं स्यात् रूपान्तरकारेण । तथाप्यभिनवोऽयं प्रयासः सर्वेषाञ्च स्वागतार्हः ।

— सम्पादकः

# विंशतिशताब्दीये आधुनिके नलदमयन्तीये नाटके- – पूर्वरागविप्रलम्भश्रृङ्गाररसस्य विवेचनम्

—सुश्री विमला देवी
(संस्कृत अध्यापिका)



संस्कृतकाव्यशास्त्रे आद्याऽऽचार्यस्य रससम्बद्धो भरतमुनेः प्रसिद्धसूत्रमस्ति' यत् सर्वमान्यम्—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" । १"

अर्थात् विभावानुभावव्यभिचारिभावानां संयोगादेव रसोऽवाप्यते सामाजिकैः अपतस्य अस्मिन् सूत्रे मूलतः रसनिष्पत्तिः प्रतिपादिता । एतत् सूत्रं रसविषये आचार्याणां विवेचनस्य आधारत्वेन शस्यते ।

संस्कृत साहित्ये रसस्य महत्त्वं प्रतिपादयन् कथ्यते यत् काव्यं प्राणविहीनशरीरवत् भवति अतः कस्यां अपि रचनायां रससिद्ध्यर्थं घटनायां वैविध्यमापाद्यते । इत्येवं रसेन परिपुष्टं काव्यं साहित्यजगति सामाजिकान् नितराम् आकर्षति । एवं कविः निजकृत्यां रसस्य प्रकृष्टत्वं दर्शयन् दर्शकान् आनन्दाब्धिमग्नान् विधत्ते । एतादृशः काव्यरसनिर्भरः कविः साहित्यजगति जयति । वस्तुतः रसैव आनन्दप्राप्त्याः मूलाधारः वर्तते । कविना काव्यस्यान्तर्गतं रसमाश्रित्य विशेषरूपेण ध्यातव्यम् ।

साहित्यदर्पणकारो विश्वनाथो नाटके एक एव श्रृंगारो वीर एव वाऽङ्गीभवेत्. अन्ये सर्वे रसा अङ्गम् इति मनुते । तस्य कथनमस्ति—

"एक एव भवेदङ्गी श्रृंगारो वीर एव वा ।"

आधुनिकं विंशतिशताब्दीयं नलदमयन्तीयं नाटकं प्रेमपूर्णमस्ति यतः अस्मिन् नाटके नायकनायिकायाः प्रेमकथा वर्णिता . अतः श्रृंगाररसः आवश्यकः । श्रृंगारेऽपि कवये विप्रलम्भश्रृंगारं रोचते 'परञ्च इदानीं प्रस्तुते

---

१. नाट्य शास्त्र, काव्यमाला, –४२, पृ० २

शोधपत्रे नाटककारेण कलिपदाऽऽचार्येण शृंगारस्यान्तर्गतं यत् पूर्वरागविप्रलम्भं वर्णितम् तस्य एवात्र समीक्ष्यते ।

सर्वप्रथमं विश्वनाथेन निम्नरूपेण विप्रलम्भ-शृंगारलक्षणम् कृतम्, यथा—

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"

— इत्यादि ★

अधुना आलोच्ये नाटके विप्रलम्भान्तर्गते पूर्वरागविप्रलम्भविषये निम्ननिदर्शनम् द्रष्टव्यम् ।

"अद्य तु कामेन सुदुःसहामवस्थां नीतः प्रकाशमानं भावं रक्षितुकामः पुरोपवनविहारव्याजमाश्रित्य इह मिलितः (विभाव्य) अथ कीदृशोऽयं विदर्भनन्दिनी या ललितलावण्यां चित्रगतामीक्षमाणः सुतरामधीरतां यातो मे प्रियवयस्या यादृशी चित्रगता सा परिदृश्यते, यदि सा तथैव, तदा समुचितं एव तादृशो मानसनिर्बन्धो वयस्यस्य किन्तु तत्रैव भूयान् संशयः समुदेति । अपि संभवति मानुषे लोके तथाभूता कमनीयलावण्य सम्पत् ।"

अत्र विदर्भदुहिता दमयन्ती आलम्बनः, तस्याः स्मृति, चित्रे चित्रितं सौन्दर्यंच उद्दीपनाः, उत्सुकतादयः व्यभिचारिणः, रतिश्च स्थायिभावेन अत्र अदृष्टवतीं दमयन्तीमिच्छायां व्याकुले नले पूर्वराग विप्रलम्भः व्यक्तः ।

निम्नप्रसंगेऽपि कीदृशं पूर्वरागविप्रलम्भ रमणीयम् ? यथा—

"प्रिय प्रथमदर्शनात् प्रभृति चित्रशिल्पे नवे,
मनो मधुरवासनारसविशेषमुग्धायितम् ।
अहो बत पदे पदे हृदयभावविद्रावणे,
प्रयत्नविनियोजना सपदि किञ्च मिथ्यायते ।।"

अत्र प्रियप्रथमदर्शने इति स्थायिभावः दमयन्ती आलम्बनः, चिन्ता-स्मृत्युत्कण्ठादयः व्यभिचारिणः, चित्रशिल्पोद्दीपनेन पूर्वरागविप्रलम्भ परिपाकं मर्मस्पर्शी ।

अन्य स्थलेऽपि पूर्वरागविप्रलम्भं दृश्यते, यथा —

"गण्डाभोगे विलसति परं पाण्डिमा प्रौढकान्तिः,
वाचां मध्ये स्फुरति सहसा नामभागः प्रियायाः ।
श्वासो दीर्घं प्रसरति चिरं शून्यशून्येव दृष्टिः,
क्षीण प्राणा न चलति पुरो विवृता देहयष्टिः ।।"

———

★

अस्मिन् पद्ये रतिः स्थायिभावः, आलम्बनः दमयन्ती, अभिलाषा-चिन्तास्मृतिसंप्रलापादयः अनुभावाः, वैवर्ण्यकृशत्वदयः व्यभिचारिणः पूर्वरागविप्रलम्भं मनुते ।

उक्तञ्चान्यत्रापि पूर्वरागविप्रलम्भविषये, यथा—

"इन्द्रजालोपनीता सा वस्तुनः परिणामवत्,
सहसैवान्यथाकारा दृश्यसे न स्वरूपतः ।"

अत्रापि रति स्थायिभावः आलम्बन च दमयन्ती, चिन्तास्मृतिगुणकथनोद्वेगादयः व्यभिचारिणः इन्द्रजालेन प्रियायाः स्पर्शः उद्दीपनः, प्रियायाः कटाक्षादयः अनुभावैः पूर्वरागविप्रलम्भः प्रकटितः ।

निम्ननिदर्शनमपि पूर्वरागविप्रलम्भगर्भितं, यथा—

सा कल्पपादपविसृष्टममर्घरत्नं,
क्षीरोदसागरभवा च सुधामनोज्ञा ।
मन्दाकिनीकनकपङ्कजविन्दशोभा,
सा कापि पुण्यपरिपाकफलस्य सीमा ।

अत्र स्थायिभावः रतिः, आलम्बनं च दमयन्ती, तस्याः विषये गुणकथनादयः व्यभिचारिणः तस्याः शोभायाः वर्णनं साधने कृते उद्दीपनैः पूर्वरागविप्रलम्भं प्रयुक्तम् ।

अन्यत्रापि उदाहरणे पूर्वरागं वर्णितम् , यथा—

"राज्यार्थं ननु चिन्तया विघटते सा मे मनोमन्दिरे, विच्छिन्नः परिकल्पनाव्यतिकरो भूयो न सन्तिष्ठते, प्रत्यक्षं तददर्शनेऽपि हृदये तद्दर्शनादुद्भवन्, आनन्दो न मयाद्य राजपदवीयोगादहो लभ्यते ।

अस्मिन् प्रसंगेऽपि रतिः स्थायिभावः दमयन्ती आलम्बनं तस्याः स्मृतिपाण्डुतोद्वेगादयः व्यभिचारिणः. आनन्दस्याभावेन अनुभावेन पूर्वरागविप्रलम्भः स्पष्टः ।

इदं निदर्शनमपि पूर्वरागविप्रलम्भाय युक्तम् , यथा—

"वह्निरेव कुसुम सुषमा हृदय तिमिरैः ममाच्छन्नम् ।
क्षितिधूङ्गह्वरगेह लग्ने वह्निरातपे यद्वत् ॥

अत्रापि रतिः स्थायिभावः, दमयन्ती आलम्बनः, पुष्पाणां शोभादयः प्राकृतिकसाधनानिः उद्दीपनैः, तापादयः व्यभिचारिभिः पूर्वरागविप्रलम्भः कथितः ।

एवं प्रकारेण निम्ननिदर्शनादपि पूर्वानुरागविप्रलम्भाः पूर्णाः, यथा—

"सुषमा कुसुमनिरूढ़ा यदि दयिता मा भवेदस्मिन् ।
काञ्चनमिव मणिवद्धं वनमिदमद्धा वसन्तीयम् ।।"

अपि च- "विना तल्लावण्यं वितथ इव वल्लीसम् यो,
विना तस्याः स्पर्शं कुसुममपि नो साधकजनुः ।
फलं वा पुष्पाणां ललितरचना पादपतले,
न चेत् पद्मं नीरे कथमिव तदीयस्तुतिकथा ।।"

"चित्रे पुरा चतुरचित्रकरोपनीता,
सा चित्ततस्कर अवलोकिता मे ।
तस्मात् परं मनसि कल्पनया प्रणीय,
तन्मूर्ति सुतरां परिमोहितात्मा ।।"

"आदौ दृष्टा चित्रशिल्पे मया या,
सैवाभून्मे रागपात्रं महीयः ।
सा चेद् भैमी तत्र मे वित्तरागः ।
सा चेदन्या तत्र मे चित्तरागः ।"

उपर्युक्तेषु सर्वेषु प्रसंगेषु राज्ञः नलस्य दमयन्तीं प्रति पूर्वानुरागविप्रलम्भं वर्णितम् । इदानीं निम्नस्थले दमयन्त्याः नलं प्रति पूर्वानुरागविप्रलम्भं कीदृशं रमणीयम्, यथा—

दम०- तदिदं श्रूयताम्, येन मे मनो नितरां व्यवसन्नम्, उक्तं देवहंसेन यथा, राजपुत्रि भवतीमधिकृत्य मदनेन सुतरां निषधराजो विकारं नीतः; किं बहुना स हि मदनमोहग्रस्तो राज्यचिन्तामात्येषु विन्यस्य चित्तनिर्वृत्तये सवयस्यो विलासोद्याने सरोवरसोपाने ऽवतीर्णः सुतरामेव ताम्यति ।"

अत्रापि स्थायिभावः रतिः, आलम्बनः च नलः, स्मृति उन्मादादयः व्यभिचारिणः, शारीरिकाभावैः अनुभावैः पूर्वरागविप्रलम्भः व्यक्तः ।

इत्येवं उपर्युक्तैः प्रसंगैः कविपादाऽऽचार्येण आधुनिके युगे प्रस्तुते निजनाटके नलदमयन्तीस्याख्ये शृंगारान्तर्गते पूर्वरागविप्रलम्भरसस्य साफल्यरूपेण प्रयोगं कृतम् । वस्तुतः नाटकेऽस्मिन् नलदमयन्त्याः प्रेमकथा वर्णिता, तौ परस्परौ प्रदर्शनैव आकर्षिताः अभवताम् । अतः प्रस्तुते नाटके प्रथमेऽङ्के यत्र तत्र व्यक्तं पूर्वानुरागविप्रलम्भं दृश्यते, यस्मिन् कृतैः विलापैः सामाजिकानां मनसि दुःखं जनयति ते च तयोः संयोगमिच्छन्ति । निष्कर्षतः रसदृष्ट्या कविपादाऽऽचार्येण वर्णितं पूर्वानुरागविप्रलम्भं पूर्णतया मर्मस्पर्शी विद्यते यत् शृंगाररसस्य मूलम् अनेन रसेन नायकनायिकायाः प्रेम दृढं प्रतीयते एतदेव नाटकस्य सफलतारूपं भवति, स एव अत्र दृश्यते अतः नाटककारेण विरचितं इदं नाटकं पूर्णरूपेण सफलीभूतम् ।

— केन्द्रीय विद्यालय-२
डी० सी० डब्ल्यू पटियाला (पंजाब)

# साम्प्रदायिकविभीषिका

प्राध्यापक हरिदत्त ग्वाड़ा "शैलज"
साहित्याचार्य एम. ए.

कश्मीराख्यां त्रिभुवनसुधासारसौन्दर्यभूतां
घाट्यां घोरा घटति घटना घातकैः पाकपुत्रैः ।
केचिद्धिंस्राः हननक्रियया तर्जयन्तः स्वदेशम्
पाकिस्तानं प्रतिदिनमहो ! भङ्गधर्माः भजन्ति ।

जम्बूद्वीपे विघटनपरा अस्त्रशस्त्रादियुक्ताः
धर्मव्याजात् सकलयवनान् योधने योजयन्तः ।
'हित्वा वार्तां सपदि शिमला' कर्तयन्ति कुभालम्
हा हा भ्रातः ! भरतवसुधा भज्यते दह्यते च ।।

पंचापस्य श्रृणुतरवणैः रावणैः द्रावयन्तम्
खालिस्तानं निपतितकुतो पश्य धर्मान्धितेयम् ।
जाता यस्यां भगतसदृशाः सिद्धस्वातन्त्र्यवीराः
सेयं भूमिः विकलविधवा आसमन्ताद् विरौति ।।

रे रे शिष्याः । स्मरत प्रथमं शत्रवो ये गुरूणाम्
यैः संत्रस्तं वरशिशुद्वयं घातितं घोरपापैः ।
सन्देशार्थं भवतु भवतां शीषगंजस्थद्वारम्
हिंसाधर्मं त्यजत भजत नित्य सत् श्री अकालम् ।।

बोडोलैण्डम् विगलितमतो श्रूयते कामरूपे
वाञ्छन्प्राप्तं निजवशभव यद्ध्यते छात्रसंघः ।
लोभाकृष्टा कुपथभ्रमिताः किन्तु व्यामूढचेताः
अर्थाभावादपि च श्रयते शस्त्रसंघर्षमार्गम् ।।

गोर्खालैण्डम् शमितमपरं वङ्गभङ्गायजातम्
पाश्चात्यानां सततमथनादुत्थितं झारखण्डम् ।
खण्डं खण्डं भवितुमुदिता पश्यतामार्यभूमौ
हं हो भ्रातः ! सुनयविधुरा सर्वकारस्य नीतिः ।

दिव्यादिव्यैः सकलसुजनैः धीरगम्भीरवीरैः
उर्वीपुत्रैः त्रिकलस्वजना यत्नतः रक्षणीयाः ।
रक्षायोग्या परमसुखदा संस्कृतिः संस्कृतञ्च
आब्रह्माण्डं जयतु विमलं राष्ट्रमेतद् ऋषीणाम् ।।

— हिमाचल केन्द्रीय महाविद्यालय
जांगला, रोहड़ू जिला-शिमला (हि. प्र.)

# भारतीयसंस्कृतिः परिपोषकः कालिदासः

आचार्य सुरेशः



आदि कवि महर्षि वाल्मीकेरनन्तरं महाकवि कालिदासो भारतीय-संस्कृतिं पुपोष । तेन स्वकाव्यनाटकेषु विविधस्थलेषु भारतीयसंस्कृत्या समुज्ज्वलं चित्रमुपस्थापितम् अनेन कविना न केवलं उपमा चमत्कारेण श्रृंगार रस प्रयोगेन स्व काव्यमलंकृतम् अपितु स्वकल्पना-माध्यमेन हिन्दूनां पुनीतसंस्कृतिः अनेक प्रसंगेषु उद्घाटिता । अस्य रघुवंश महाकाव्यम् पाठकानां हृदयेषु गोः सेवाया महत्वम् सतत संञ्चारयंति । नृपदिलीपो यस्या शुश्रूषया पुत्र रत्नं प्राप्तवान् सा भारतीयसभ्यतायाः मूलम् कामधेनुः वन्दनीया, प्रथमार्चनीया प्राणदात्रिः । अमृतदायिनी हन्त ? इदानीम् तुच्छ स्वार्थवशेन वधस्थानेष विक्रीयते च अजावत् । धिक् हिन्दूनां जीवनं सर्वमिदं श्रुत्वा दृष्ट्वा अपि येषां शरीरे रोमाञ्च न भवति. स्व संस्कृतेः स्व सभ्यतायाः, स्वमातुः रक्षार्थं दृढव्रताः न सञ्जाताः किं अद्यापि दिलीप-सदृश शुश्रूषया भारतीयाः न किञ्चिदपि प्राप्तुं शक्नुवन्ति ? हा नास्तिकता ! हा-पाश्चात्यानुकरणम् ! हा-भारतदुर्दशा, यस्या शरीरे सर्वतीर्थानां देवतानामधिवासः सा धेनुरूपा देवी, किञ्चिद द्रव्यलोभवशेन हन्यते । किं देवभूम्यां ऋषि जन्मभूम्याम् म्लेच्छाचारः ? नास्ति कोऽपि रक्षकः. वेतनवृद्धयर्थं तु अनशन कुर्वाणाः वहवः श्रूयन्ते प्रतिदिनं परं केनापि भारतीयेन तस्याः रक्षार्थं हिंसाविरोधार्थं च स्वप्राणानां त्यागः अनशन कृतम याः मूकत्वेन निज सुतैः स्वप्राणानां रक्षां याचते । चेत् वधोऽयं तिदिनं क्रमशः पूर्ववत् वृद्धि प्राप्तः निः सशयं हिन्दूनां अस्तित्वमपि विलयं गमिष्यति. हन्तेरभावेन यज्ञ पर-परावरुद्धा भविष्यसि अस्यां दशायां आशास्महे चेदय उच्चघोषः हिन्दूनां कर्णकुहरेषु प्रविष्टः स्यात् -

"उत्तिष्ठ। जाग्रत उत्थाय च स्व संस्कृतिं रक्षत"

अस्माकम् स्मृतिग्रन्थेषु हिन्दू शब्दस्योत्पत्तिविषये कथितम्ः—

गोषु भक्ति र्भवेद्यस्य प्रणवे च दृढा मतिः ।
पुनर्जन्मनि विश्वासो स वै हिन्दुरिति स्मृतः ।।
(अत्रिस्मृतिः) अतः

भारतीयाः, पाश्चात्य संस्कृत्या अन्धानुकरणेन युष्माभिः स्वसंस्कृति-रुपेक्षिता । एषा भारतभूमिः ऋषीणां जननी, देवानां जननी, अवताराणां जननी ज्ञानीनां धर्मधुरन्धराणां, महावीरपुरुषाणां पुण्यतीर्थानां धरित्री । किं स्वर्णं विहाय लौहाकांक्षा, शान्तिं विहाय अशान्त्यान्वेषणम्. सत्यमुपेक्ष्य असत्यानुसरणम् अहिंसापरिपालनेन हिंसावतारः भोगानृत्यक्त्वा भोगासक्ति, उर्ध्वं गच्छद्भिः अधोपतनं, यज्ञ भूम्यां निवसद्भि वधभूमिरभिलाषा, ज्ञनं विहाय अज्ञानपिपासा, एषा रामकृष्ण जननी गांधी जवाहरजन्मभूमिगौतमनानकभूमिम् पुण्यभूमिम् वन्देऽहं भारत भूमिम् ।

प्राचीनकालादारभ्य अद्यावधि कविभिः स्वजन्मभूमि भारतीय-संस्कृति श्चानुरागवशेन पदे-पदे प्रशसिता । कविवरकालिदासस्यापि अयमेव प्रयासः ।

——

## नीलत्वम्

डा० लेखराम शास्त्री



हालाहलं मिष्ठमिदं, दिनानुदिनं विवर्धमानं ।
पीत्वा पीत्वा पुनः पीत्वा कंठ शिवस्य नीलत्वमेति ।। ✲
तृष्णया अतर्प्यया संघातेन चोत्पद्यमानं ।
पीत्वा पीत्वा पुनः पीत्वा, कंठे शिवस्य नीलत्वमेति ।।
अनिच्छयापि स्वकीयया, संसारेण बलाद्दीयमान ।
पीत्वा पीत्वा पुनः पीत्वा, कंठः शिवस्य नीलत्वमेति ।।
बलाबलैः परस्परं, प्रेम्णाऽप्रेम्णा वा कर्ष्यमाणं ।
पीत्वा पीत्वा पुनः पीत्वा, कंठः शिवस्य नीलत्वमेति ।।

---

✲ नीलोऽपि कंठः पुनः पुनः नीलत्वमेति अन्यच्च शिवस्य कल्याण-मार्गिणः अनीलोऽपि कंठः नीलत्वमेतीति ।

— गव. संस्कृत कालेज,
सोलन (हि. प्र.)

# देवभूमि र्हि पञ्चाम्बुः

आचार्य श्याम लाल शर्मा
व्याकरणाचार्य (एम. ए. संस्कृत)



अद्य संसारस्य एव दशा सघर्षमयी वर्तते। परितो राक्षसासुरवृत्तीनां साम्राज्यमस्ति। पर भारतस्य सर्वासु प्रमुखसमस्यासु प्रमुखा इयं पञ्जाबसमस्या। यतोहि एतया समस्यया पञ्जाबनिवासि-निर्दोष जनानां पीड़न, दलनं, शोषण निवासकरणादिकुकृत्यं प्रतिदिवसे सततं एधाते। मातुर्भगिन्याः कन्यायाश्च विविधात्याचारापमानादिक शिखोग्रवादिमूर्खैः। गोलिकाप्रहारकरणे अत्याचाराचरणे लुण्ठनोत्पाटनादिकार्यकरणे लज्जां न अनुभवन्ति उग्रवादिखलाः। सम्पूर्णे पञ्चाबप्रदेशे पीड़ित जनानां चीत्कार एव श्रवणाय लभ्यते। चीत्कारेऽस्मिन् शब्द स्फोटो भवति यत्—

"हमारी आंखे भी है वीरान, हमारा दिल भी है खाली।
चन्द आंसू भी नहीं बचे, खुद पे बहाने के लिए"

"आत्मवत् सर्वभूतेषु" अथवा 'आत्मनः प्रतिकूलानि" "वसुधैव कुटुम्बकम्" इत्यादि भावना कुत्रापि नैव दृष्यते न च श्रूयते। तत्र जायते जिज्ञासा यत् एवं सति देशस्य किं भविष्यति? सर्वं विदितमेतत् यत् पञ्जाब भूमिः वेदोत्पत्तिभूः मन्यते। वाल्मीकिप्रभृतीनां नैकेषां ऋषीणां च सा जन्मस्थली कर्मस्थली च अवर्तत 'परं खेदस्य विषयोऽयं यत् पुरा यत्र दुग्धदधि - नद्यः प्रवहिन्त स्म तत्राद्य निर्दोष-जनरुधिरनद्यः दृष्यन्ते अस्माभिः।

शिखानां भ्रमोऽय यत् हिन्दुशिखौ च परस्परं भिन्नौ। यतो हि व्याकरण दृष्टयाः दर्शनेन शिष्यशब्दस्य अपभ्रंशोऽय शिख शब्दः। शिखशिष्ययोः नास्ति भेदः उक्तञ्चापि कबीरेण यत्—

'हिन्दु शिख दोह एक है, विभ विचार कच्छ नाहि।
जल ते उपजहिं जियों, जलि ही विखै समाहिं।"

कोऽपि धर्मः हिंसायाः पाठं न पाठयति उक्तञ्चापि-

''मजहब नहीं सिखाता आपस में वैर रखना ।
हिन्दु है हम वतन है हिन्दुस्तान हमारा" ।· इति ।।

धर्मः विश्वजनीनो व्यापकश्च पदार्थोऽस्ति । धर्मे नास्ति संकीर्णतायैः तथा च लुण्ठनादिकुकृत्याय किमपि स्थानम् । धर्मोऽवं महान् विशालः पदार्थः । वस्तुतो धर्म एव हि सर्वत्र एकात्मानुभूतिं जनयति, संकीर्णतां समूलं उन्मूलयति, सर्वानपि अत्याचारान् शमयति । उक्तं चापि—यथा-

श्रूयतां धर्म सर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् । इति ।।

प्रभु कृपया यदि सर्वे गुरुधर्मानुयायिशिखजनाः शांतिदया-निर्दोषजनकारुण्यं करिष्यन्ति तर्हि पञ्जाव प्रदेशः साक्षात् देव लोको भविष्यति विश्वशान्तिश्च स्वयं एव सिद्धा भविष्यति ।

आतंको उग्रवादश्च द्वावेतौ देश नाशको ।
विहाय शक्तिः प्राप्या वै प्रार्थये शिखवन्धुभिः ।।

पञ्जाबस्योग्रवादं चेत् सर्वकारः प्रणाशयेत् ।
देव भूमि हि पञ्जाबु देव लोको भविष्यति ।। इति ।।

पूर्व प्रवक्ता—

श्री वसिष्ठ संस्कृत विद्या पीठ
तुङ्गेश जिला शिमला (हि. प्र.)






आचार्य पूर्णचन्द्र भार्गव



तर्ज—तुम्हीं मेरे मन्दिर तुम्ही मेरी पूजा तुम्हीं देवता हो ।

न येषां मनस्सु प्रकामं प्रमादो,
जनास्ते परित्यज्य मोहं भवस्य ।
सदैवात्र भीमे च कालि प्रसिद्धे,
विशुद्धौ त्वदोयौ चरणौ भजन्ते ॥

कथं ते स्वरूपं कथं वा बलन्ते,
विमूढ़ा ग्रहीतुं हि शक्ता भवेम ।
नैवात्र किञ्चिद् मनो मे समर्थं,
त्वमेवात्र माये ऽव मां तान् समस्तान् ॥

हृदि ज्योतिरायातु देवि त्वदीयं,
न चान्यत् मनो वाञ्छितं मे जगत्याय् ।
इदं जीवनं मेऽस्तु भक्त्या च शान्तं,
परित्यज्य गर्वं जगज्जालजन्यम् ॥

इयं प्रार्थना मे विषादेनपूर्णा,
बहु व्याधि सन्देह सन्तापजन्या ।
समागच्छ शीघ्रं प्रहर्तुं प्रबुद्धे.
ममाज्ञानमेतत् करालं महद्धि ॥

— ग्राम पोस्ट डुमैहर
जिला सोलन, (हि प्र.)

## स्वतन्त्रता

कु. कुसुमलता
सुपुत्री:- सोहनलाल शर्मा,



आशिता अद्य प्रभृति: एव महाविद्यालयं गन्तुं प्रारभत । तत्र सा सर्वं नव इव पश्यति स्म । यतो हि तस्या इदं प्रथमं दिनमासीत् । बहवो दिवसा व्यतीता: प्रतिदिनं गृहेऽऽगत्य यदा सा महाविद्यालयीयं दैनिकं जीवन स्मरति तदा स बालक: अधिकरूपेण स्मरणम् आयाति य: तां सर्वदा स्नेहपूर्णया दृशा पश्यति स्म ।

एकदा सा महाविद्यालये किञ्चित्समयपूर्वम् आगता । तत्र सा अवलोकितवती यत् सोऽपि बालक: तत्र तिष्ठति । परस्परम् अवलोक्य, अजानन्तौ एव तौ आकर्षितौ जातौ । अभिवादनानन्तरम् आशिता अपृच्छत्-किं तव नाम ?

'अंकित:' इति स स्वनाम अकथयत् ।
आशिता अपि स्वनाम प्रकटितवती ।

द्वावेव स्वाभाविकेन स्नेहेन आप्लावितौ जातौ । तयो: मिलन क्रम: दैनिक जीवनस्य अङ्गं जातम् । वार्तालाप - प्रसंगे आशिता उक्तवती यत् "तस्या: न कोऽपि भ्राता अस्ति भो अंकित ! अहं त्वां भ्रातृबन्धनेन व्यवहर्तुम् इच्छामि ।"

अंकितोऽवदत्-"अयि आशिते ! अहमपि त्वां स्वां भगिनीम् मन्ये अत: रक्षाबन्धनोत्सवे त्वया रक्षाबन्धन कार्यम् ।"

यत: अंकितस्यापि न काऽपि भगिनी आसीत् । शून्यमिव अनुभवति अंकितो भगिनीं विना तथैव आशिताऽपि भ्रातरं विना ।

एकस्मिन् दिने आशिता अवदत् । भो भ्रात: ! अद्य त्वया मम गृहे आगन्तव्यम्, अहं तव हस्ते रक्षासूत्रं बद्धुमिच्छामि । अंकित: तथैव अकरोत् ।

सार्धं सा तस्या गृहे प्राप्तः ।

गृहे आशितां विहाय न कोऽपि आसीत् । तस्मिन् आगते तस्या: प्रसन्नता आकाशम् अस्पृशत् सा अनुभवति स्म यदद्य गृहं पूर्णं इवास्ति ।

आशिता रक्षासूत्र हस्ते धृत्वा अवदत्—अयि भ्रातः ! अद्य प्रभृति स्वभगिन्याः रक्षाया भारः तवोपरि भविष्यति ।

अंकितोऽवदत् - अयि भगिनि ! अद्य रक्षाबन्धनोत्सवस्तु नास्ति, परं श्व: स्वतन्त्रता दिवसोऽस्ति, इति हर्षस्य विषय ।

आम् भ्रात ! यदि वयम् अद्यापि परतन्त्रा अभविष्याम तदा न जाने अस्माकं किदृशी दशा अभविष्यत् ।

"अयि भगिनि ! अस्माकं कृते इदं गौरवाय कल्पते यदद्य वयं स्वतन्त्र-देशस्य नागरिका स्म: " अंकित: प्रत्युत्तरमदात् ।

आशिता अकथयत्—अस्तु भ्रात: ! अधुना इदं रक्षासूत्र बध्नातु । रक्षासूत्रम् हस्ते गृहीतमेवासीत् तदैव कस्यापि पादध्वनि:

कर्णयो: पतिता दृष्टम् अरे ! इयं तु मदीया जननी । मातरं दृष्ट्वा द्वावेव सन्नौ जातौ ।

तौ सार्धम् उपविशन्तौ दृष्ट्वा मातु: क्रोध: सीमानम् अतिक्रामत् अगदत् च हन्त ! मम सम्मानं धूलिसात्कृतं त्वया सम्प्रति तु केवलं दश दिनानि एव महाविद्यालये यापितानि नवयुवकानाम् आगमनमपि आरब्धम् मया स्वप्नेऽपि न चिन्तितमासीत् यत्त्वया इत्थं विधीयते तस्य परिणाम: ईदृश: भविता । किं लज्जा अपयाता ! किं मृतस्य पितु: स्मरणं नैव आगतम् ।"

आशितायाः नेत्रयो: अश्रूणि समागतानि उक्तवती च नहि जननी, नहि जननी नास्ति ईदृशम्, एवमुक्त्वा भूमौ अपतत् । पतन समये एव तस्या: प्राणा: निर्गता: ।

अंकित मुहुर्मुहुः हा ! भगिनि ! हन्त भगिनि । मामपि सहैव नय एवम् आकारयन् रोदितिस्म ।

आशितायाः जननी तमपि बलात् नीचै: पातितवती । सोऽपि तत्रैव श्वासान् अत्यजत् । अपरेद्यु: तयो: चिता प्रज्ज्वलतिस्म ।

——

- घिदसा – पटियाला (पञ्जाब)




प्रा. हरिश्चन्द्र रेणापुरकरः गुलबर्गा,



विद्याविदग्धरसिकोत्तमसूरिवर्या।
साहित्यकाव्यकमनीयकलाविलासा। ।
आचार्यवर्यकुलमण्डनकेशवार्याः
सप्रेमसाञ्जलि ममास्तु नतिर्विनम्रा ।१।

कातंज्ञभावभरितेन मया व्यलोकि
मत्काव्यबन्धमधिकृत्य भवत्समीक्षा ।
सौहार्दपूर्णसरसोज्ज्वलभावगर्भा
निर्व्याजनिर्मलविशालमनोऽभिरामा ।२।

अत्यन्तकार्यनिरतैरपि मान्यवर्यै—
रालोड्य दीर्घकविता अपि मे सधैर्यम् ।
यच्चारुमार्मिकतरं लिखितं भवद्भिः
प्रीतोऽस्मि तेन परमोपकृतो भवामि ।३।

निष्कामसख्यभरितान्तरशास्त्रिवर्यैः
स्वोदारशोभनवदान्यविशालदृष्ट्या ।
मत्काव्यवर्णनपरं लिखितं यदत्र
तद्व्यञ्जकं खलु भवन्मनसो महिम्नः ।४।

मच्छुष्कनीरसनतोन्नतपद्यपक्तिः
प्रीत्यै बभूव भवतां यदि विद्वत्तणाम् ।
हेतुस्तु तत्र भवतां गुणगृह्यतैव
गृह्णाति निम्बरजसो मधु मक्षिकापि ।५।

नाहं कविः कविकुले न च मे प्रसूतिः
साहित्यिकोऽपि न भवामि न लेखकोऽपि ।
गीर्वाणवाक्चरणपङ्कजचञ्चरीको
गुञ्जारवं हि वितनोमि यदाकदाचित् ।६।

सामान्यकाव्यगुणहीनकृतिर्मदीया
साहित्यकाव्यरससिद्धसमीक्षकाणाम् ।
तोषाय किञ्चिदपि चेद् रसिकोत्तमानां
स्वल्पं यथार्थकृतिनं खलु भावयेऽहम् ।७।

संक्षिप्तमेतद्धिनिवेद्य किञ्चित्
कार्तज्ञभावं च पुनः प्रकाश्य ।
सम्प्रार्थ्य देवं च भवत्सुखाय
मौनं भजेऽहं हरिश्चन्द्रनामा ।८।



# हिमाचल प्रदेश राजकीय संस्कृत महाविद्यालय प्राध्यापक संघेन



### हि. प्र. मुख्यमन्त्रिणे श्री शान्ताकुमाराय, श्री दीनानाथ शास्त्रिणो, विधानसभा सदस्यस्य नेतृत्वे, प्रदत्तं ज्ञापनम्

सेवा में,

मानीय मुख्य मन्त्री महोदय,
हि० प्र० सरकार शिमला ।

विषय :—

प्रदेश के पांच राजकीय संस्कृत शिक्षण संस्थानों का महाविद्यालय-स्तर ।

मान्यवर,

विनम्र निवेदन है कि हिमाचल सरकार प्रदेश में पांच संस्कृत महाविद्यालय चला रही है। इन पाँचों में मैट्रिक (अनिवार्य) के बाद शास्त्री की पांच डिग्री कक्षाएं पढ़ाई जाती है जिसे भारत सरकार ने १९६४ में तथा हिमाचल सरकार ने १९६७ मे बी. ए. के समकक्ष मान्यता प्रदान की है सोलन, शिमला और सुन्दरनगर में सरकारी आदेशों से भिन्न-भिन्न विषयों की आचार्य कक्षाएं भी पढ़ाई जा रही है। जिन्हें भारत और हिमाचल सरकार ने एम.ए. के समकक्ष मान्यता प्रदान की है नाहन में भी विभागीय स्वीकृति से आचार्य कक्षाएं चलती रही है। महोदय, ये पांचों संस्कृत शिक्षण संस्थाए पहले से ही महा विद्यालय अथवा कालेज हैं। क्योंकि हिमाचल सरकार ने इन पांचों को समय-समय पर 'संस्कृत महाविद्यालय" अथवा "संस्कृत कालेज" के रूप में अधिगृहीत किया है इन में विश्व विद्यालय स्तर की शिक्षा दी जाती है। बी. ए. और एम. ए. के स्तर की शास्त्री और आचार्य की डिग्री कक्षाएं इनमें पढ़ाई जाती है १९८३ से इन संस्थाओं में शास्त्री कक्षाओं में बी. ए. के हिन्दी, अंग्रेजी, इतिहास और राजनीति-शास्त्र ये चार आधुनिक विषय भी पढ़ाये जा रहे हैं। १९७४ के सर्विस—रूल्ज़ के नोटिफिकेशन में सरकार ने इन संस्थाओं को "संस्कृत कालेज" के रूप में परिभाषित भी किया है। इन्हीं तर्कों के आधार पर हिमाचल प्रदेश उच्च न्यायालय ने १९७८ में यह निर्णय दिया

है कि ये राजकीय संस्कृत शिक्षा—संस्थाएं किसी भी सूरत में "पाठशालाएं" नहीं हैं बल्कि अन्य कालेजों की तरह ही ये "कालेज" अथवा स्नातोत्तर महाविद्यालय हैं। माननीय उच्च न्यायालय के इस निर्णय की प्रतिलिपि साथ संलग्न है। शिक्षा-सचिव हिमाचल सरकार तथा शिक्षा-निदेशक हि. प्र. के उन दस्तावेजों की प्रतिलिपियां भी साथ संलग्न हैं जिनके तहत शिक्षा विभाग-सरकार ने १९८५ में उच्च-न्यायालय से अपील वापिस लेकर न्यायालय के उक्त निर्णय को स्वीकार किया है, इन संस्कृत शिक्षा-संस्थाओं को "कालेज" माना है तथा इनमें कार्यरत पंडितों तथा हैड-पंडितों को पिछली १-११-६६ की तिथि से ही दूसरे डिग्री कालेजों के लेक्चरार और प्रिंसिपलों के समकक्ष वेतनमान प्रदान किए हैं। यहां तक कि शिक्षा विभाग के उच्चाधिकारी समय-समय पर अदालत में यह हल्फीया ब्यान देते रहे हैं कि उच्च न्यायालय के निर्णयानुसार सरकार एवं विभाग इन संस्कृत महाविद्यालयों को "कालेज" ट्रीट कर चुकी है एवं ट्रीट कर रही है।

परन्तु यह भारी आश्चर्य एवं खेद की बात है कि यह सब होने के बावजूद भी उच्च शिक्षाधिकारी बार बार यही कहते रहते हैं कि वे इन संस्थाओं को कालेज या महा विद्यालय नहीं बल्कि पाठशाला ही मानते हैं और इन्हें पाठशालाओं की तरह ही ट्रीट करते रहेंगे। यही बहाना लगाकर उच्च शिक्षाधिकारियों ने इनमें कार्यरत शिक्षकों के पदोन्नति स्थायीकरण, वेतन - निर्धारण आदि के (लगभग एक दर्जन निर्विवाद प्रकरणों को जानबूझ कर लटकाया और उलझाया हुआ है तथा इन संस्कृत महाविद्यालयों के सुधार एवं स्टाफ आदि के लिए महाविद्यालय स्तर पर बनायी गयी योजनाओं को रद्द किया जा रहा है। परन्तु जब अदालत में जवाब देने की बात आती है तो लिखा जाता है कि सरकार इन संस्थाओं को कालेज ट्रीट कर चुकी है।

इस प्रकार माननीय उच्च न्यायालय ने संस्कृत शिक्षकों के सम्बन्ध में जो न्याय प्रदान किया है, वह न्याय भी हमें प्राप्त नहीं हो रहा हैं जिसे प्राप्त करने के लिए महोदय हम आपकी शरण में आए हैं। इस सम्बन्ध में हमारा निम्न निवेदन है कि:-

१. सरकारी रिकार्ड के आधार पर जो माननीय उच्च न्यायालय ने संस्कृत महा विद्यालयों को कालेज निर्णीत किया है तथा इनके शिक्षकों को जो अन्य डिग्री कालेजों के लेक्चरार और प्रिंसिपलों के समान वेतनमान देने का निर्णय जारी किया है शिक्षाधिकारियों ने उसे प्रतिष्ठा का प्रश्न बना लिया है। इस कारण अंग्रेजी के विद्वान उच्च शिक्षा अधिकारियों का राजकीय संस्कृत महा विद्यालयों और संस्कृत शिक्षकों के प्रति जो प्रतिकूल और अपमानजनक व्यवहार चलता आ रहा है उसे बदलने के लिए कृपया आप अपने अप्रतिम प्रभाव का प्रयोग करें ताकि मान्य अधिकारीजन माननीय उच्च न्यायालय के निर्णय को खुले

मन से स्वीकार करके उसे सर्वांगीण रूप से लागू करने के लिए बिना किसी बहाने के सच्चे मन से प्रयास करे।

२. सरकार राजकीय संस्कृत महा विद्यालयों को हरेक उद्देश्य के लिए "संस्कृत कालेज" अथवा आदर्श संस्कृत महा विद्यालय" व्यवहृत (ट्रीट) करने की घोषणा करे ताकि विभाग इनसे सुधार के लिए तदनुसार योजनाएं तैयार करें।

३. इन संस्कृत महा विद्यालयों की शोचनीय दशा में अपेक्षित सुधार लाने के लिए आवश्यक कदम उठाए जाएं।

४. इन संस्कृत महा विद्यालयों के शिक्षकों का एक वर्ग माननीय उच्च न्यायालय के निर्णय को अर्थात् सभी अथवा एम. ए. शिक्षा प्राप्त अध्यापकों को पंडितवर्ग के समान कालेज लैक्चरार का वेतनमान प्रदान करने के लिए प्रशासनिक-अधिकरण में गया है। सरकार सहानुभूतिपूर्वक विचार करके इस वर्ग के शिक्षकों को भी कालेज लैक्चरर का वेतनमान प्रदान करे जैसा कि १९८५ में उच्चाधिकारियों की मिटिंग में निर्णय लिया गया था परन्तु उसे अब तक कार्यान्वित नहीं किया गया।

५. संस्कृत महा विद्यालयों के आचार्यों तथा प्राचार्यों के पदोन्नति स्थायीकरण नए यू. जी. सी. वेतनमान आदि के अनेक निर्विवाद मामले वर्षों से शिक्षा निदेशालय अथवा सचिवालय में लम्बित पड़े हैं जिन्हें एक मास के भीतर निपटाने के लिए निर्देश जारी करने की कृपा करें।

विश्वास है कि आपकी सरकार हमें अवश्य न्याय दिलाएगी।

धन्यवाद। भवदीय,

दिनांक २६-४-१९९०

— मस्तराम शर्मा
प्रधान
संस्कृत महा विद्यालय.
प्राध्यापक संघ कार्यालय नाहन
(सिरमौर) हि. प्र.








## हिमाचल सरस्वती केन्द्रीय आदर्श
## सं. महाविद्यालयः

हिमाचल प्रदेशस्य शिमला मण्डलान्तर्गत रोहड़ क्षेत्र मध्यवर्ति जांगला ग्रामस्थो हिमाचल सरस्वती सं. महाविद्यालयः १-४-९० तः भारतसर्वकार शिक्षामन्त्रालयेन केन्द्रीय आदर्श संस्कृत महाविद्यालय रूपेण स्वीकृतः।

हिमाचल प्रदेशे एष प्रथमः केन्द्रीय आदर्श संस्कृत महाविद्यालयो वर्तते।

हि. स. संस्कृतमहाविद्यालयः श्री परमानन्द शास्त्रिणः, एम. ए., तथा श्री लछमनदास महोदयस्य सत्प्रयासेन कतिपयवर्षपूर्वं स्थापितोऽभूत्। उभयोरेतयोः परम प्रयासेन तथा पूर्वमुख्यमन्त्रिणां माननीय श्री वीरभद्रसिंह, महाभागानां सहयोगेन भारतसर्वकारेण केन्द्रीय आदर्श महाविद्यालयः स्वीकृत इति हिमाचल प्रदेशीयानां कृते परमप्रमोदावहम्।

सत्यमेव पर्वतीयग्रामटिकासु भारतीया संस्कृतिरद्युनापि विग्रहवतीव विराजते संस्कृताश्रिता।

संस्कृतवाङ्मयाध्ययनमनुसन्धानञ्च एतास्वेव पर्वत कन्दरासु पूर्वं महर्षिभिः सम्पादितमासीत्-इति नास्ति विपश्चितां तिरोहितम्।

हिमाचलीयेऽस्मिन् आदर्शमहाविद्यालये अध्ययनाध्यापनस्य निवासस्य च एतादृशी सुरुचिरतरा व्यवस्था स्याद्यया भारतेतरदेशीया अपि विद्यार्थिनः अध्ययनार्थं समाकृष्टाः स्युः।



# सोलन हरिमन्दिरस्य वार्षिकोत्सवः



परमात्मस्वरूपैः ब्रह्मर्षिवर्यैः श्री हरि जी महाभागैः संस्थापितस्य श्री हरिमन्दिरस्य वार्षिकोत्सवसमारोहः २२-५-९० तः महता समारोहेण समजनि ।

अस्मिन् समारोहे श्रीमदाचार्यकेशवशर्मभिः शिमलास्थ-संस्कृतशोधसंस्थानस्य सचिव महाभागैः श्री मद्भागवतमहा-पुराणस्य सप्ताह पर्यन्तं पाण्डित्यपूर्णं प्रवचनं विहितम् । अन्येषाञ्च सन्तमहापुरुषाणां प्रवचनानि, संकीर्तनमण्डलीनां कीर्तन-कार्यक्रमाः, भक्तिसंगीतसरिताप्रवाहश्च त्रिविधकार्यक्रमा समायोजिता अभूवन् ।

अस्मिन हरिमन्दिरे एष सप्तदशतमः श्रीमद्भागवत सप्ताहः समभूत् ।



## संस्कृतं विना नैव कापि भारतीया भाषा पूर्णा

श्री बी० सत्यनारायण रेड्डी

वाराणस्यां 'वाग्योगचेतनापीठ' द्वारा समायोजिते हि एकस्मिन् पुस्तकविमोचनसमारोहे तस्य विमोचन कुर्वाणैः राज्यपालैः 'प्रोक्तम्-संस्कृत-भाषा सीखने को सरल एवं वैज्ञानिक विधि' नामकं पुस्तकं नून हि लाभकरं भविष्यति यतो हि पुस्तकमिदं मा येन श्री भागीरथप्रसादत्रिपाठिना सम्यग् विधाय प्रस्तुत जनानां हिताय किन्तु यत्किञ्चिदपि जानामि तत्सर्वं भारतीय-विद्याभवनस्य संस्कृतशिक्षणपाठ्यपुस्तकेन स्वयमधीत्य जानामि इदमपि गृहे गत्वा पठिष्यामि, अनुभावयामि च पुनः यदि कदाचित् विद्वत्संसदसि समागमन भवेत्तर्हि संस्कृते वदिष्यामि ।

इदं तु निश्चितं वर्तते यत्सर्वकारस्य साहाय्यं विनापि संस्कृतविद्वांस कार्यरता दृश्यन्ते इयं च परम्परा अस्य देशस्य पुरातनी तथापि संस्कृतं खलु समेषां कृते अनिवार्यं करणीयम् । संस्कृतं क अस्माकं सभ्यताया संस्कृतेश्च भाषा । अतः इयं निश्चितरूपेण सततं प्रचलिष्यतीति कामये ।

—